अनुजं वीक्ष्य देवापि मूर्ध्नि सूर्य्यध्वजोऽबधीत् ।
मुष्टिना वज्रपातेन सोऽपतन्मूर्च्छितो भुवि ।
मूर्च्छितस्य रिपुः क्रोधात् सेनागणमताड़यत् ॥ ४४ ॥

शशिध्वजः सर्वजगन्निवासं
कल्किं पुरस्तादभिसूर्य्यवर्चसम् ।
श्यामं पिशङ्गाम्बरमम्बुजेक्षणं
वृहद्भुजं चारुकिरीटभूषिणम् ॥ ४५ ॥
नानामणिव्रातचिताङ्गशोभया
निरस्तलोकेक्षणहृत्तमोमयम् ।
विशाखयूपादिभिरावृतं प्रभुं
ददर्श धर्मेण कृतेन पूजितम् ॥ ४६ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे शशिध्वज-
कल्किसेनयोर्युद्धं नाम अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

सूत उवाच । हृदि ध्यानास्पदं रूपं कल्केर्दृष्ट्वा शशिध्वजः ।
पूर्णं खङ्गधरं चारुतुरगारूढ़मब्रवीत् ॥ १ ॥
धनुर्बाणधरं चारुविभूषणवराङ्गकम् ।
पापतापविनाशार्थमुद्यतं जगतां परम् ॥ २ ॥
प्राह तं परमात्मानं हृष्टरोमा शशिध्वजः ।
एह्येहि पुण्डरीकाक्ष ! प्रहारं कुरु मे हृदि ॥ ३ ॥
अथवात्मन् ! बाणभिया तमोऽन्धे हृदि मे विश ।
निर्गुणस्य गुणज्ञत्वमद्वैतस्यास्त्रताड़नम् ॥ ४ ॥

निष्कामस्य जयोद्योगसहायं यस्य सैनिकम् ।
लोका: पश्यन्तु युद्धे मे द्वैरथे परमात्मन: ॥ ५ ॥
परबुद्धिर्यदि दृढ़ं प्रहर्त्ता विभवे त्वयि ।
शिवविष्णोर्भेदकृते लोकं यास्यामि संयुगे ॥ ६ ॥
इति राज्ञो वच: श्रुत्वा अक्रोध: क्रुद्धवद्विभु: ।
बाणैरताड़यत् संख्ये धृतायुधमरिन्दमम् ॥ ७ ॥
शशिध्वजस्तत्प्रहारमगणय्य वरायुधै: ।
तं जघ्ने बाणवर्षेण धाराभिरिव पर्वतम् ॥ ८ ॥
तद् बाणवर्षभिन्नान्त: कल्कि: परमकोपन: ।
दिव्यै: शस्त्रास्त्रसङ्घातैस्तयोर्युद्धमवर्त्तत ॥ ९ ॥
ब्रह्मास्त्रस्य च ब्रह्मास्त्रैर्वायव्यस्य च पर्वतै: ।
आग्नेयस्य च पार्ज्जन्यै: पन्नगस्य च गारुड़ै: ॥ १० ॥
एवं नानाविधैरस्त्रैरन्योऽन्यमभिजघ्नतु: ।
लोका: सपाला: संत्रस्ता युगान्तमिव मेनिरे: ॥११॥
देवा बाणाग्निसंत्रस्ता अगमन् खगमा: किल ।
ततोऽतिवितथोद्योगौ वासुदेवशशिध्वजौ ॥ १२ ॥
निरस्त्रौ बाहुयुद्धेन युयुधाते परस्परम् ।
पदाघातैस्तलाघातैर्मुष्टिप्रहरणैस्तथा ॥ १३ ॥
नियुद्धकुशलौ वीरौ मुमुदाते परस्परम् ।
वराहोद्धृतशब्देन तं तलेनाहनद्धरि: ॥ १४ ॥
स मूर्च्छितो नृप: कोपात् समुत्थाय च तत्क्षणात् ।
मुष्टिभ्यां वज्रकल्पाभ्यामबधीत् कल्किमोजसा ।
स कल्किस्तत्प्रहारेण पपात भुवि मूर्च्छित: ॥ १५ ॥
धर्म्म: कृतञ्च तं दृष्ट्वा मूर्च्छितं जगदीश्वरम् ।

समागतौ तमानेतुं कच्चे तौ जगृहे नृपः ॥ १६ ॥
कल्किं वचस्युपादाय लब्धार्थः प्रययौ गृहम् ।
युद्धे नृपाणामन्येषां पुत्रौ दृष्ट्वा सुदुर्जयौ ॥ १७ ॥

कल्किं सुराधिपपतिं प्रधने विजित्य
धर्मं कृतञ्च निजकक्षयुगे निधाय ।
हर्षोल्लसद्धृदय उत्पुलकः प्रमाथी
गत्वा गृहं हरिगृहे ददृशे सुशान्ताम् ॥ १८ ॥

दृष्ट्वा तस्याः सुललितमुखं वैष्णवीनाञ्च मध्ये
गायन्तीनां हरिगुणकथास्तामथ प्राह राजा ।
देवादीनां विनयवचसा शम्भले जन्मवाना
विद्यालाभं परिणयविधिं म्लेच्छपाषण्डनाशम् ॥ १९ ॥

कल्किः स्वयं हृदि समायमिहागतोऽद्धा
मूर्च्छाछलेन तव सेवनमीक्षणार्थम् ।
धर्मं कृतञ्च मम कक्षयुगे सुशान्ते !
कान्ते ! विलोकय समर्च्चय संविधेहि ॥ २० ॥

इति नृपवचसा विनोदपूर्णा
हरिकृतधर्म्मयुतं प्रणम्य नाथम् ।
सह निजसखिभिर्ननर्त्त रामा
हरिगुणकीर्त्तनवर्त्तना विलज्जा ॥ २१ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
धर्म्मकल्किकृतानामानयनं नाम नवमोऽध्यायः ।

---

## दशमोऽध्यायः ।

सुशान्तोवाच ।

जय हरेऽमराधीशसेवितं तव पदाम्बुजं भूरिभूषणम् ।
कुरु ममाग्रतः साधुसत्कृतं त्यज महामते! मोहमात्मनः ॥१॥
तव वपुर्जगद्रूपसम्पदा विरचितं सतां मानसे स्थितम् ।
रतिपतेर्मनोमोहदायकं कुरु विचेष्टितं कामलम्पटम् ॥ २ ॥
तव यशो जगच्छोकनाशनं मृदुकथामृतप्रीतिदायकम् ।
स्मितसुधोक्षितं चन्द्रवन्मुखं तव करोत्वलं लोकमङ्गलम् ॥३॥
मम पतिस्त्वयं सर्वदुर्जयो यदि तवाप्रियं कर्म्मणाचरेत् ।
जहि तदात्मनः शत्रुमुद्यतं कुरु कृपां न चेदीदृगीश्वरः ॥ ४ ॥
महदहं युतं पञ्चमात्रया प्रकृतिजायया निर्मितं वपुः ।
तव निरीक्षणाल्लीलया जगत् स्थितिलयोदयं ब्रह्मकल्पितम् ॥५
भूवियन्मरुद्वारितेजसां राशिभिः शरीरेन्द्रियाश्रितैः ।
त्रिगुणया स्वया मायया विभो! कुरु कृपां भवत्सेवनार्थिनाम् ६
तव गुणालयं नाम पावनं कलिमलापहं कीर्त्तयन्ति ये ।
भवभयक्षयं, तापतापिता मुहुरहो जनाः संसरन्ति नो ॥७॥
तव जन्मः सतां मानवर्द्धनं निजकुलक्षयं देवपालकम् ।
कृतयुगार्पकं धर्म्मपूरकं कलिकुलान्तकं शन्तनोतु मे ॥ ८ ॥
मम गृहं पतिपुत्रनप्तृकं गजरथैर्ध्वजैश्चामरैर्धनैः ।
मणिवरासनं सत्कृतिं विना तव पदाब्जयोः शोभयन्ति किम् ?९
तव जगद्वपुः सुन्दरस्मितं मुखमनिन्दितं सुन्दरारवम् ।
यदि न मे प्रियं वल्गु चेष्टिते परिकरोत्यहो मृत्युरस्त्विह ॥१०॥

हयचरभयहरकरहरशरणखरतरवरशरदशबलमदन ! ।
जयहतपरभरभववरनशनशशधरशतसमरसभरवदन ! ॥११॥

इति तस्याः सुशान्ताया गीतेन परितोषितः ।
उत्तस्थौ रणशय्यायाः कल्किर्युद्धस्थवीरवत् ॥ १२ ॥
सुशान्तां पुरतो दृष्ट्वा कृतं वामे तु दक्षिणे ।
धर्मं शशिध्वजं पश्चात् प्राहेति व्रीड़िताननः ॥ १३ ॥
का त्वं ? पद्मपलाशाक्षि ! मम सेवार्थमुद्यता ।
कान्ते ! शशिध्वजः शूरो मम पश्चादुपस्थितः ॥ १४ ॥
हे धर्म ! हे कृतयुग ! कथमत्रागता ? वयम् ।
रणाङ्गनं विहायास्याः शत्रोरन्तःपुरे वद ॥ १५ ॥
शत्रुपत्नाः कथं साधु ! सेवन्ते मामरिं मुदा ।
शशिध्वजः शूरमानी मूर्च्छितं हन्ति नो कथम् ? ॥१६॥

सुशान्तोवाच । पाताले दिवि भूमौ वा नरनागसुराऽसुराः ।
नारायणस्य ते कल्के ! के वा ? सेवां न कुर्वते ॥ १७ ॥
यत् सेवकानां जगतां मित्राणां दर्शनादपि ।
निवर्त्तन्ते शत्रुभावस्तस्य साक्षात् कुतो रिपुः ? ॥ १८ ॥
त्वया सार्द्धं मम पतिः शत्रुभावेन संयुगे ।
यदि योग्यस्तदानेतु' किं समर्थो ? निजालयम् ॥१९॥
तव दासो मम स्वामी अहं दासी निजा तव ।
आवयोः सम्प्रसादाय आगतोऽसि महाभुज ! ॥ २० ॥

धर्म उवाच । अहं तवैतयोर्भक्त्या नामरूपानुकीर्त्तनात् ।
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि कलिक्षय ! ॥२१॥

कृतयुग उवाच । अधुनाहं कृतयुगं तव दासस्य दर्शनात् ।
त्वमीश्वरो जगत्पूज्यसेवकस्यास्य तेजसा ॥ २२ ॥

शशिध्वज उवाच। दण्ड्यं मां दण्डय विभो! योद्धृत्वादुद्यतायुधम्।
येन कामादिरागेण त्वय्यात्मन्यपि वैरिता ॥ २३ ॥
इति कल्किर्वचस्तेषां निशम्य हसिताननः ।
त्वया जितोऽस्मीति नृपं पुनःपुनरुवाच ह ॥ २४ ॥
ततः शशिध्वजो राजा युद्धादाहूय पुत्रकान् ।
सुशान्ताया मतिं बुद्ध्वा रमां प्रादात् स कल्कये ॥ २५ ॥
तदैत्य मरुदेवापी शशिध्वजसमाहृतौ ।
विशाखयूपभूपश्च रुधिराश्वश्च संयुगात् ॥ २६ ॥
शय्याकर्णनृपेणापि भल्लाटं पुरमाययुः ।
सेनागणैरसंख्यातैः सा पुरी मर्द्दिताभवत् ॥ २७ ॥
गजाश्वरथसम्बाधैः पत्तिच्छत्ररथध्वजैः ।
कल्किनापि रमायाश्च विवाहोत्सवसम्पदाम् ॥ २८ ॥
द्रष्टुं समीयुस्त्वरिता हर्षात् सबलवाहनाः ।
शङ्खभेरीमृदङ्गानां वादित्राणाञ्च निस्वनैः ॥ २९ ॥
नृत्यगीतविधानैश्च पुरस्त्रीकृतमङ्गलैः ।
विवाहो रमया कल्केरभूदतिसुखावहः ॥ ३० ॥
नृपा नानाविधैर्भोज्यैः पूजिता विविशुः सभाम् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चावरजातयः ॥ ३१ ॥
विचित्रभोगाभरणाः कल्किं द्रष्टुमुपाविशन् ।
तस्यां सभायां शुशुभे कल्किः कमललोचनः ॥ ३२ ॥
नक्षत्रगणमध्यस्थः पूर्णः शशधरो यथा ।
रेजे राजगणाधीशो लोकान् सर्वान् विमोहयन् ॥३३॥
रमापतिं कल्किमवेक्ष्य भूपः
सभागतं पद्मदलायतेक्षणम् ।

जामातरं भक्तियुतेन कर्म्मणा
विबुध्य मध्ये निषसाद तत्र ह ॥ ३४ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे कल्किना रमाविवाहो नाम दशमोऽध्याय: ।

---

## एकादशोऽध्याय: ।

सूत उवाच । तत्राहुस्ते सभामध्ये वैष्णवं तं शशिध्वजम् ।
मुनिभि: कथिताशेषभक्तिव्यासक्तविग्रहम् ॥ १ ॥
सुशान्ताञ्च कृतेनापि धर्मेण विधिवद् युताम् ।
राजान ऊचु: । युवां नारायणास्यास्य कल्के: श्वशुरतां गतौ ।
वयं नृपा इमे लोका ऋषयो ब्राह्मणाश्च ये ॥ २ ॥
प्रेच्य भक्तिवितानं वा हरौ विस्मितमानसा: ।
पृच्छामस्त्वामियं भक्ति: क्व लब्धा ? परमात्मन: ॥ ३ ॥
कस्य वा ? शिच्चिता राजन् ! किंवा ? नैसर्गिकी तव ।
श्रोतुमिच्छामहे राजन् ! त्रिजगज्जनपावनीम् ।
कथां भागवतीं त्वत्त: संसाराश्रमनाशिनीम् ॥ ४ ॥
शशिध्वज उवाच । स्त्रीपुंसोरावयोस्तत्तत् शृणुतामोघविक्रमा: ! ।
वृत्तं यज्जन्मकर्म्मादि स्मृतिं तद्भक्तिलक्षणम् ॥ ५ ॥
पुरा युगसहस्रान्ते गृध्रोऽहं पूतिमांसभुक् ।
गृध्रीयं मे प्रियारण्ये कृतनीड़ो वनस्पतौ ॥ ६ ॥
चचार कामं सर्वत्र वनोपवनसङ्कुले ।
मृतानां पूतिमांसौघै: प्राणिनां वृत्तिकल्पकौ ॥ ७ ॥
एकदा लुब्धक: क्रूरो लुलोभ पिशिताशिनौ ।
आवां वीक्ष्य गृहे पुष्टं गृध्रं तत्राप्ययोजयत् ॥ ८ ॥

तं वीक्ष्य जातविश्रम्भौ क्षुधया परिपीड़ितौ।
स्त्रीपुंसौ पतितौ तत्र मांसलोभितचेतसौ ॥ ९ ॥
यद्भावावां वीक्ष्य तदा हर्षादागत्य लुब्धकः।
जग्राह कण्ठे तरसा चञ्चुग्राघातपीड़ितः ॥ १० ॥
आवां गृहीत्वा गण्डक्याः शिलायां सलिलान्तिके।
मस्तिष्कं चूर्णयामास लुब्धकः पिशिताशनः ॥ ११ ॥
चक्राङ्कितशिलागङ्गामरणादपि तत्क्षणात्।
ज्योतिर्मयविमानेन सद्यो भूत्वा चतुर्भुजौ ॥ १२ ॥
प्राप्तौ वैकुण्ठनिलयं सर्वलोकनमस्कृतम्।
तत्र स्थित्वा युगशतं ब्रह्मणो लोकमागतौ ॥ १३ ॥
ब्रह्मलोके पञ्चशतं युगानामुपभुज्य वै।
देवलोके कालवशाद् गतं युगचतुःशतम् ॥ १४ ॥
ततो भुवि नृपास्तावत् बद्ध्सूनुरहं स्मरन्।
हरेरनुग्रहं लोके शालग्रामशिलाश्रमम् ॥ १५ ॥
जातिस्मरत्वं गण्डक्याः किं तस्याः कथयाम्यहम्।
यज्जलस्पर्शमात्रेण माहात्म्यं महदद्भुतम् ॥ १६ ॥
चक्राङ्कितशिलास्पर्शमरणस्येदृशं फलम्।
न जाने वासुदेवस्य सेवया किं भविष्यति ॥ १७ ॥
इत्यावां हरिपूजासु हर्षविह्वलचेतसौ।
नृत्यन्तावनुगायन्तौ विलुठन्तौ स्थिताविह ॥ १८ ॥
कल्केर्नारायणांशस्य अवतारः कलिक्षयः।
पुरा विदितवीर्य्यस्य पृष्टो ब्रह्ममुखात् श्रुतः ॥ १९ ॥
इति राजसभायां सः श्रावयित्वा निजाः कथाः।
ददौ गजानामयुतमश्वानां लक्षमादरात् ॥ २० ॥

रथानां षट्सहस्रन्तु ददौ पूर्णस्य भक्तितः।
दासीनां युवतीनाञ्च रमानाथाय षट्शतम् ॥ २१ ॥
रत्नानि च महार्हाणि दत्त्वा राजा शशिध्वजः।
मेने कृतार्थमात्मानं स्वजनैर्बान्धवैः सह ॥ २२ ॥
सभासद इति श्रुत्वा पूर्वजन्मोदिताः कथाः।
विस्मयाविष्टमनसः पूर्णं तं मेनिरे नृपम् ॥ २३ ॥
कल्किं स्तुवन्तो ध्यायन्तो प्रशंसन्तो जगज्जनाः।
पुनस्तमाहूराजानं लक्षणं भक्तिभक्तयोः ॥ २४ ॥

नृपा ऊचुः। भक्तिकाम्याद्भगवतः को वा? भक्तो विधानवित्।
किं करोति किमश्नाति क्व वा वसति वक्ति किम्? ॥२५॥
एतान् वर्णय राजेन्द्र! सर्वं त्वं वेत्सि सादरात्।
जातिस्मरत्वात् कृष्णस्य जगतां पावनेच्छया ॥ २६ ॥
इति तेषां वचः श्रुत्वा प्रफुल्लवदनो नृपः।
साधुवादैः समामन्त्र्य तानाह ब्रह्मचोदितम् ॥ २७ ॥

शशिध्वज उवाच। पुरा ब्रह्मसभामध्ये महर्षिगणसङ्कुले।
सनको नारदं प्राह भवद्भिर्यास्त्विहोदिताः ॥ २८ ॥
तेषामनुग्रहेणाहं तत्रोषित्वा श्रुताः कथाः।
यास्ताः संकथयामीह शृणुध्वं पापनाशनाः ॥ २९ ॥

सनक उवाच। का भक्तिः? संसृतिहरा हरौ लोकनमस्कृता।
तामादौ वर्णय मुने! नारदावहिता वयम् ॥ ३० ॥

नारद उवाच। मनःषष्ठानीन्द्रियाणि संयम्य परया धिया।
गुरावपि न्यसेद्देहं लोकतत्त्वविचक्षणः ॥ ३१ ॥
गुरौ प्रसन्ने भगवान् प्रसीदति हरिः स्वयम्।
प्रणवाग्निप्रियामध्ये सवर्णं तन्निदेशतः ॥ ३२ ॥

स्मरेदनन्यया बुध्या देशिक: सुसमाहित: ।
पाद्यार्घ्याचमनीयाद्यै: स्नानवासोविभूषणै: ॥ ३३ ॥
पूजयित्वा वासुदेवपादपद्मं समाहित: ।
सर्वाङ्गसुन्दरं रम्यं स्मरेत् हृत्पद्ममध्यगम् ॥ ३४ ॥
एवं ध्यात्वा वाक्यमनोबुद्धीन्द्रियगणै: सह ।
आत्मानमर्पयेद् विद्वान् हरावेकान्तभाववित् ॥ ३५ ॥
अङ्गानि देवास्त्वेषान्तु नामानि विदितान्युत ।
विष्णो: कल्केरनन्तस्य तान्येवान्यन्न विद्यते ॥ ३६ ॥
सेव्य: कृष्ण: सेवकोऽहमन्ये तस्यात्ममूर्त्तय: ।
अविद्योपाधयो ज्ञानाद् वदन्ति प्रभवादय: ॥ ३७ ॥
भक्तस्यापि हरौ द्वैतं सेव्यसेवकवत् तदा ।
नान्यद् विना तमित्येव क्व च ? किञ्च न विद्यते ॥३८॥
भक्त: स्मरति तं विष्णुं तन्नामानि च गायति ।
तत् कर्म्माणि करोत्येव तदानन्दसुखोदय: ॥ ३९ ॥
नृत्यत्युद्गतवद्रौति हसति प्रैति तन्मना: ।
विलुठत्यात्मविस्मृत्या न वेत्ति कियदन्तरम् ॥ ४० ॥
एवंविधा भगवतो भक्तिरव्यभिचारिणी ।
पुनाति सहसा लोकान् सदेवासुरमानुषान् ॥ ४१ ॥
भक्ति: सा प्रकृतिर्नित्या ब्रह्मसम्पत् प्रकाशिता ।
शिवविष्णुब्रह्मरूपा वेदाद्यानां वरापि वा ॥ ४२ ॥
भक्ता: सत्वगुणाध्यासात् रजसेन्द्रियलालसा: ।
तमसा घोरसङ्कल्पा भजन्ति द्वैतदृग् जना: ॥ ४३ ॥
सत्वान्निर्गुणतामेति रजसा विषयस्पृहा ।
तमसा नरकं यान्ति संसाराद्वैतधर्म्मिणि ॥ ४४ ॥

उच्छिष्टमवशिष्टं वा पथ्यं पूतमभीप्सितम्।
भक्तानां भोजनं विष्णोर्नैवेद्यं सात्त्विकं मतम्॥ ४५॥
इन्द्रियप्रीतिजननं शुक्रशोणितवर्द्धनम्।
भोजनं राजसं शुद्धमायुरारोग्यवर्द्धनम्॥ ४६॥
अतःपरं तामसानां कट्वम्लोष्णविदाहिकम्।
पूतिपर्य्युषितं ज्ञेयं भोजनं तामसप्रियम्॥ ४७॥
सात्त्विकानां वने वासो ग्रामे वासस्तु राजसः।
तामसं द्यूतमद्यादिसदनं परिकीर्त्तितम्॥ ४८॥
न दाता स हरिः किञ्चित् सेवकस्तु न याचकः।
तथापि परमा प्रीतिस्तयोः किमिति शाश्वती॥ ४९॥

इत्येतत् भगवत ईश्वरस्य विष्णो-
र्गुणकथनं सनको विबुध्य भक्त्या।
सविनयवचनैः सुरर्षिवर्य्यं
परिणुत्वेन्द्रपुरं जगाम शुद्धः॥ ५०॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
नृपगणशशिध्वजसंवादे जातिस्मरत्वकथनं
नाम एकादशोऽध्यायः।

—०—

## द्वादशोऽध्यायः।

शशिध्वज उवाच।

एतद् वः कथितं भूपाः! कथनीयोरुकर्म्मणः।
कथा भक्तस्य भक्तेश्च किमन्यत् कथयाम्यहम्॥ १॥
भूपा ऊचुः। त्वं राजन्! वैष्णवश्रेष्ठः सर्वसत्त्वहिते रतः।
तवावेशः कथं युद्धरङ्गे हिंसादिकर्म्मणि॥ २॥

प्रायश: साधवो लोके जीवानां हितकारिण: ।
प्राणबुद्धिधनैर्वाग्भि: सर्वेषां विषयात्मनाम् ॥ ३ ॥

शशिध्वज उवाच ।

द्वैतप्रकाशिनी या तु प्रकृति: कामरूपिणी ।
सा सूते त्रिजगत् कृत्स्नं वेदांश्च त्रिगुणात्मिका ॥ ४ ॥
ते वेदास्त्रिजगत् धर्म्मशासना धर्म्मनाशना: ।
भक्तिप्रवर्त्तका लोके कामिनां विषयैषिणाम् ॥ ५ ॥
वात्स्यायनादिमुनयो मनवो वेदपारगा: ।
वहन्ति बलिमीशस्य वेदवाक्यानुशासिता: ॥ ६ ॥
वयं तदनुगा: कर्म्मधर्म्मनिष्ठा रणप्रिया: ।
जिघांसन्तं जिघांसामो वेदार्थकृतनिश्चया: ॥ ७ ॥
अवध्यस्य बधे यावांस्तावान् बध्यस्य रक्षणे ।
इत्याह भगवान् व्यास: सर्ववेदार्थतत्पर: ॥ ८ ॥
प्रायश्चित्तं न तत्रास्ति तत्राधर्म: प्रवर्त्तते ।
अतोऽत्र वाहिनीं हत्वा भवतां युधि दुर्जयाम् ॥ ९ ॥
धर्म्मं कृतञ्च कश्चिन्तु समानीयागता वयम् ।
एषा भक्तिर्मम मता तवाभिप्रेतमीरय ॥ १० ॥
अहं तदनुवक्ष्यामि वेदवाक्यानुसारत: ।
यदि विष्णु: स सर्वत्र तदा किं हन्ति को हत: ? ॥११॥
हन्ता विष्णुर्हतो विष्णुर्बध: कस्यास्ति तत्र चेत् ।
युद्धयज्ञादिषु वधे न बधो वेदशासनात् ॥ १२ ॥
इति गायन्ति मुनयो मनवश्च चतुर्दश्म् ।
इत्थं युद्धैश्च यज्ञैश्च भजामो विष्णुमीश्वरम् ॥ १३ ॥
अतो भागवतीं मायामाश्रित्य विधिना यजन् ।

सेव्यसेवकभावेन सुखी भवति नान्यथा ॥ १४ ॥

भूपा ऊचुः । निमेर्भूपस्य भूपाल ! गुरोः शापात् मृतस्य च ।

ताट्टशे भोगायतने विरागः कथमुच्यताम् ॥ १५ ॥

शिष्यशापात् वशिष्ठस्य देहावाप्तिर्मृतस्य च ।

श्रूयते किल मुक्तानां जन्म भक्तविमुक्तता ॥ १६ ॥

अतो भागवती माया दुर्बोध्या विजितात्मनाम् ।

विमोहयन्ति संसारे नानात्वादिन्द्रजालवत् ॥ १७ ॥

इति तेषां वचो भूयः श्रुत्वा राजा शशिध्वजः ।

प्रोवाच वदतां श्रेष्ठो भक्तिप्रवणया धिया ॥ १८ ॥

शशिध्वज उवाच । बहुना जन्मनामन्ते तीर्थक्षेत्रादियोगतः ।

दैवाद् भवेत् साधुसङ्गस्तस्मादीश्वरदर्शनम्॥ १९ ॥

ततः सालोक्यताम्प्राप्य भजन्त्याहृतचेतसः ।

भुक्त्वा भोगाननुपमान् भक्तो भवति संसृतौ ॥ २० ॥

रजोजुषः कर्मपराः हरिपूजापराः सदा ।

तन्नामानि प्रगायन्ति तद्रूपस्मरणोत्सुकाः ॥ २१ ॥

अवतारानुकरणपर्वव्रतमहोत्सवाः ।

भगवद्भक्तिपूजाढ्याः परमानन्दसंप्लुताः ॥ २२ ॥

अतो मोक्षं न वाञ्छन्ति हृष्टमुक्तिफलोदयाः ।

मुक्ता लभन्ते जन्मानि हरिभावप्रकाशकाः ॥ २३ ॥

हरिरूपाः क्षेत्रतीर्थपावना धर्मतत्पराः ।

सारासारविदः सेव्यसेवका द्वैतविग्रहाः ॥ २४ ॥

यथावतारः कृष्णस्य तथा तत्सेविनामिह ।

एवं निमेर्निमिषता लीला भक्तस्य लोचने ॥ २५ ॥

मुक्तस्यापि वशिष्ठस्य शरीरभजनादरः ।

एतद् वः कथितं भूपा! माहात्म्यं भक्तिभक्तयोः ॥२६॥
सद्यःपापहरं पुंसां हरिभक्तिविवर्द्धनम्।
सर्वेन्द्रियस्थदेवानामानन्दसुखसञ्चयम्।
कामरागादिदोषघ्नं मायामोहनिवारणम्॥ २७॥
नानाशास्त्रपुराणवेदविमलव्याख्यामृताम्भोनिधिं
संमथ्यातिचिरं त्रिलोकमुनयो व्यासादयो भावुकाः।
कृष्णे भावमनन्यमेवममलं हैयङ्गवीनं नवं
लब्ध्वा संमृतिनाशनं त्रिभुवने श्रीकृष्णतुल्यायते॥ २८॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
भक्तिभक्तमाहात्म्यं नाम द्वादशोऽध्यायः।

---

## त्रयोदशोऽध्यायः।

सूत उवाच। इति भूपः सभायां सः कथयित्वा निजाः कथाः।
शशिध्वजः प्रीतमनाः प्राह कल्किं कृताञ्जलिः॥ १॥

शशिध्वज उवाच।

त्वं हि नाथ! त्रिलोकेश! एते भूपास्त्वदाश्रयाः।
मां तथा विद्धि राजानं त्वन्निदेशकरं हरे॥ २॥
तपस्तप्तुं यामि कामं हरिद्वारं मुनिप्रियम्।
एते मत्पुत्रपौत्राश्च पालनीयास्त्वदाश्रयाः॥ ३॥
ममापि कामं जानासि पुरा जाम्बवती यथा।
निधनं द्विविदस्यापि तदा सर्वं सुरेश्वर!॥ ४॥
इत्युक्त्वा गन्तुमुद्युक्तं भार्य्यया सहितं नृपम्।
लज्जयाधोमुखं कल्किं प्राहुर्भूपाः किमित्युतः॥ ५॥

हे नाथ ! किमनेनोक्तं यत् श्रुत्वा त्वमधोमुखः ।
कथं ? तद् ब्रूहि कामं नः किं वा नः शाधि संशयात् ॥ ६ ॥
कल्किरुवाच । अमूं पृच्छत वो भूपा यूष्माकं संशयच्छिदम् ।
शशिध्वजं महाप्राज्ञं मद्भक्तिकृतनिश्चयम् ॥ ७ ॥
इति कल्केर्वचः श्रुत्वा ते भूपाः प्रोक्तकारिणः ।
राजानं तं पुनः प्राहुः संशयापन्नमानसाः ॥ ८ ॥
नृपा ऊचुः । किं त्वया कथितं राजन् ! शशिध्वज ! महामते ! ।
कथं कल्किस्तद्वदिदं श्रुत्वैवाभूदधोमुखः ॥ ९ ॥
शशिध्वज उवाच । पुरा रामावतारेण लक्ष्मणादिन्द्रजिद् बधम् ।
मोघश्वालक्ष्य द्विविदो राक्षसत्वात् स दारुणात् ॥ १० ॥
अग्न्यागारे ब्रह्मवीरबधेनैकाह्निको ज्वरः ।
लक्ष्मणस्य शरीरेण प्रविष्टो मोहकारकः ॥ ११ ॥
तं व्याकुलमभिप्रेक्ष्य द्विविदो भिषजां वरः ।
अश्विवंशेन सञ्जातः स्वापयामास लक्ष्मणम् ॥ १२ ॥
लिखित्वा रामभद्रस्य संज्ञापत्नीमतन्द्रितः ।
लक्ष्मणं दर्शयामास ऊर्द्धस्तिष्ठन् महाभुजः ॥ १३ ॥
लक्ष्मणो वीक्ष्य तां पत्नीं विज्वरो बलवानभूत् ।
स ततो द्विविदं प्राह वरं वरय वानर ! ॥ १४ ॥
द्विविदस्तद्वचः श्रुत्वा लक्ष्मणं प्राह हृष्टवत् ।
त्वत्तो मे मरणं प्रार्थ्यं वानरत्वाच्च मोचनम् ॥ १५ ॥
पुनस्तं लक्ष्मणः प्राह मम जन्मान्तरे तव ।
मोचनं भविता कीश ! बलरामशरीरिणः ॥ १६ ॥
समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः ।
ऐकाह्निकं ज्वरं हन्ति लिखनं यस्तु पश्यति ॥ १७ ॥

इति मन्त्राक्षरं द्वारि लिखित्वा तालपत्रके ।
यस्तु पश्यति तस्यापि नश्यत्यैकाहिकज्वरः ॥ १८ ॥
इति तस्य वरं लब्ध्वा चिरायुः सुस्थवानरः ।
बलरामास्त्रभिन्नात्मा मोक्षमापाकुतोभयम् ॥ १९ ॥
तथा क्षेत्रे सूतपुत्रो निहतो लोमहर्षणः ।
बलरामास्त्रयुक्तात्मा नैमिषेऽभूत् स्ववाञ्छया ॥ २० ॥
जाम्बुवांश्च पुरा भूपा वामनत्वं गते हरौ ।
तस्याप्यूर्द्धगतं पादं तत्र चक्रे प्रदक्षिणम् ॥ २१ ॥
मनोजवं तं निरीक्ष्य वामनः प्राह विस्मितः ।
मत्तो वृणु वरं काममृक्षाधीश! महाबल!॥ २२॥
इति तं हृष्टवदनो ब्रह्मांशो जाम्बुवान् मुदा ।
प्राह भो! चक्रदहनात् मम मृत्युर्भविष्यति ॥ २३ ॥
इत्युक्ते वामनः प्राह कृष्णजन्मनि मे तव ।
मोक्षश्चक्रेण संभिन्नशिरसः संभविष्यति ॥ २४ ॥
मम कृष्णावतारे तु सूर्य्यभक्तस्य भूपतेः ।
सत्राजितस्तु मण्यर्थे दुर्वादः समजायत ॥ २५ ॥
प्रसेनस्य तव भ्रातुर्बधस्तु मणिहेतुकः ।
सिंहात् तस्यापि मण्यर्थे बधो जाम्बवता कृतः ॥ २६ ॥
दुर्वादभयभीतस्य कृष्णस्यामिततेजसः ।
मण्यन्वेषणचित्तस्य ऋक्षेणाभूद्रणो बिले ॥ २७ ॥
स निजेशं परिज्ञाय तच्चक्रग्रस्तबन्धनम् ।
मुक्तो बभूव सहसा कृष्णं पश्यन् सलक्ष्मणम् ॥ २८ ॥
नवदूर्वादलश्यामं दृष्ट्वा प्रादात् निजात्मजाम् ।
तदा जाम्बवतीं कन्यां प्रगृह्य मणिना सह ॥ २९ ॥

द्वारकां पुरमागत्य सभायां मामुपाह्वयत् ।
आहूय मह्यं प्रददौ मणिं मुनिगणार्च्चितम् ॥ ३० ॥
सोऽहं तां लज्जया तेन मणिना कन्यकां स्वकाम् ।
विवाहेन ददावस्मै लावण्याज्जगृहे मणिम् ॥ ३१ ॥
तां सत्यभामामादाय मणिं मय्यर्प्य स प्रभुः ।
द्वारकामागत्य पुनर्गजाह्वयमगाद्विभुः ॥ ३२ ॥
गते कृष्णे मां निहत्य शतधन्वाग्रहीन्मणिम् ।
अतोऽहमिह जानामि पूर्वजन्मनि यत् कृतम् ॥ ३३ ॥
मिथ्याभिशापात् कृष्णस्य नैवाभून्मोचनं मम ।
अतोऽहं कल्किरूपाय कृष्णाय परमात्मने ।
दत्त्वा रमां सत्यभामारूपिणीं यामि सद्गतिम् ॥ ३४ ॥
सुदर्शनास्त्रघातेन मरणं मम काङ्क्षितम् ।
मरणेऽभूदिति ज्ञात्वा रणे वाञ्छामि मोचनम् ॥ ३५ ॥
इत्यसौ जगतामीशः कल्किः श्वशुरघातनम् ।
श्रुत्वैवाधोमुखस्तस्थौ क्रिया धर्मभिया प्रभुः ॥ ३६ ॥
अत्याश्चर्य्यमपूर्वमुक्तममिदं श्रुत्वा नृपा विस्मिता
लोकाः संसदि हर्षिता मुनिगणाः कल्केर्गुणाकर्षिताः ।
आख्यानं परमादरेण सुखदं धन्यं यशस्यं परं
श्रीमद्भूपशशिध्वजेरितवचो मोक्षप्रदं चाभवत् ॥ ३७ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे शशिध्वजेरितचक्रमरणाख्यानं नाम त्रयोदशोऽध्यायः ।

---

## चतुर्दशोऽध्यायः ।

सूत उवाच । ततः कल्किर्महातेजाः श्वशुरं तं शशिध्वजम् ।
समामन्त्र्य वचश्चित्रैः सह भूपैर्ययौ हरिः ॥ १ ॥
शशिध्वजो वरं लब्ध्वा यथाकामं महेश्वरीम् ।
स्तुत्वा मायां त्यक्तमायः सप्रियः प्रययौ वनम् ॥ २ ॥
कल्किः सेनागणैः सार्द्धं प्रययौ काञ्चनीं पुरीम् ।
गिरिदुर्गावृतां गुप्तां भोगिभिर्विषवर्षिभिः ॥ ३ ॥
विदार्य्य दुर्गं सगणः कल्किः परपुरञ्जयः ।
छित्त्वा विषायुधान् बाणैस्तां पुरीं ददृशेऽच्युतः ॥ ४ ॥
मणिकाञ्चनचित्राढ्यां नागकन्यागणावृताम् ।
हरिचन्दनवृक्षाढ्यां मनुजैः परिवर्जिताम् ॥ ५ ॥
विलोक्य कल्किः प्रहसन् प्राह भूपान् किमित्यहो ! ।
सर्पस्येयं पुरी रम्या नराणां भयदायिनी ।
नागनारीगणाकीर्णा किं यास्यामो वदन्त्विह ॥ ६ ॥
इति कर्त्तव्यताव्यग्रं रमानाथं हरिं प्रभुम् ।
भूपांस्तदनुरूपांश्च खे वागाहाशरीरिणी ॥ ७ ॥
विशोक्य नेमां सेनाभिः प्रवेष्टुं भोस्त्वमर्हसि ।
त्वां विनान्ये मरिष्यन्ति विषकन्यादृशादपि ॥ ८ ॥
आकाशवाणीमाकर्ण्य कल्किः शुकसहायवान् ।
ययावेकः खड्गधरस्तुरगेण त्वरान्वितः ॥ ९ ॥
गत्वा तां ददृशे वीरो धीराणां धैर्य्यनाशिनीम् ।
रूपेणाकृष्य लक्ष्मीशं प्राह प्रहसितानना ॥ १० ॥

विषकन्योवाच। संसारेऽस्मिन् मम नयनयोर्वीक्षणक्षीणदेहा
लोका भूपाः कति कति गता मृत्युमत्युग्रवीर्य्याः ।
साहं दीनासुरसुरनरप्रेक्षणप्रेमहीना
ते नेत्राब्जद्वयरससुधाप्लाविता त्वां नमामि ॥ ११ ॥
क्वाहं विषेक्षणा दीना क्वामृतेक्षणसङ्गमः ।
भवेऽस्मिन् भाग्यहीनायाः केनाहो! तपसा कृतः ॥१२॥
कल्किरुवाच। कासि कन्यासि सुश्रोणि! कस्मादेषा गतिस्तव।
ब्रूहि मां कर्म्मणा केन विषनेत्रं तवाभवत् ॥ १३ ॥
विषकन्योवाच। चित्रग्रीवस्य भार्य्याहं गन्धर्वस्य महामते!।
सुलोचनेति विख्याता पत्युरत्यन्तकामदा ॥ १४ ॥
एकदाहं विमानेन पत्या पीठेन सङ्गता।
गन्धमादनकुञ्जेषु रेमे कामकलाकुला ॥ १५ ॥
तत्र यक्षमुनिं दृष्ट्वा विकृताकारमातुरम्।
रूपयौवनगर्वेण कटाक्षेणाहसं मदात् ॥ १६ ॥
सोपालम्भं मुनिः श्रुत्वा वचनञ्च ममाप्रियम्।
अशाप मां क्रुधा तत्र तेनाहं विषदर्शना ॥ १७ ॥
निक्षिप्ताहं सर्पपुरे काञ्चन्यां नागिनीगणे।
पतिहीना दैवहीना चरामि विषवर्षिणी ॥ १८ ॥
न जाने केन तपसा भवद्दृष्टिपथं गता।
त्यक्तशापामृताक्षाहं पतिलोकं व्रजाम्यतः ॥ १९ ॥
अहो! तेषामस्तु शापः प्रसादो मा सतामिह।
पत्युः शापादृषेर्मोक्षात् तव पादाब्जदर्शनम् ॥ २० ॥
इत्युक्त्वा सा ययौ स्वर्गं विमानेनार्कवर्चसा।
कल्किस्तु तत् पुराधीशं नृपं चक्रे महामतिम् ॥ २१ ॥

अमर्षस्तत्सुतो धीमान् सहस्रो नाम तत्सुतः ।
सहस्रतः सुतश्चासीद्राजा विश्रुतवानसिः ॥ २२ ॥
बृहन्नलानां भूपानां सम्भूता यस्य वंशजाः ।
तं मनुं भूपशार्दूलं नानामुनिगणैर्वृतः ॥ २३ ॥
अयोध्यायां चाभिषिच्य मथुरामगमद्धरिः ।
तस्यां भूपं सूर्य्यकेतुमभिषिच्य महाप्रभम् ॥ २४ ॥
भूपं चक्रे ततो गत्वा देवापिं वारणावते ।
अरिस्थलं वृकस्थलं माकन्दञ्च गजाह्वयम् ॥ २५ ॥
पञ्चदेशेश्वरं कृत्वा हरिः शम्भलमाययौ ।
शौम्भं पौण्ड्रं पुलिन्दञ्च सुराष्ट्रं मगधं तथा ।
कविप्राज्ञसुमन्त्रेभ्यः प्रददौ भ्रातृवत्सलः ॥ २६ ॥
कीकटं मध्यकर्णाटमन्ध्रमोड्रं कलिङ्गकम् ।
अङ्गं वङ्गं स्वगोत्रेभ्यः प्रददौ जगदीश्वरः ॥ २७ ॥
स्वयं शम्भलमध्यस्थः कङ्केन कलापकान् ।
देशं विशाखयूपाय प्रादात् कल्किः प्रतापधान् ॥ २८ ॥
चोलवर्व्वरकर्वाख्यान् द्वारकादेशमध्यगान् ।
पुत्रेभ्यः प्रददौ कल्किः कृतवर्म्मपुरस्कृतान् ॥ २९ ॥
पित्रे धनानि रत्नानि ददौ परमभक्तितः ।
प्रजाः समाश्वास्य हरिः शम्भलग्रामवासिनः ॥ ३० ॥
पद्मया रमया कल्किर्गृहस्थो मुमुदे भृशम् ।
धर्म्मश्चतुष्पादभवत् कृतपूर्णं जगत्त्रयम् ॥ ३१ ॥
देवा यथोक्तफलदाश्चरन्ति भुवि सर्वतः ।
सर्वशस्या वसुमती हृष्टपुष्टजनावृता ।
शाठ्यचौर्य्यानृतैर्हीना आधिव्याधिविवर्जिता ॥ ३२ ॥

विप्रा वेदविदः सुमङ्गलयुता नार्य्यस्तु चार्य्या व्रतैः
पूजाहोमपराः पतिव्रतधरा यागोद्यताः क्षत्त्रियाः ।
वैश्या वस्तुषु धर्म्मतो विनिमयैः श्रीविष्णुपूजापराः
शूद्रास्तु द्विजसेवनाद्धरिकथालापाः सपर्य्यापराः ॥२३॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
विषकन्यामोक्षकृतधर्म्मप्रवृत्तिकथनं
नाम चतुर्दशोऽध्यायः ।

---

## पञ्चदशोऽध्यायः ।

शौनक उवाच । शशिध्वजो महाराजः स्तुत्वा मायां गतः कुतः ।
का वा ? मायास्तुतिः सूत वद तत्त्वविदां वर ! ।
या त्वत्कथा विष्णुकथा वक्तव्या सा विशुद्धये ॥ १ ॥
सूत उवाच । शृणुध्वं मुनयः ! सर्वे ! मार्कण्डेयाय पृच्छते ।
शुकः प्राह विशुद्धात्मा मायास्तवमनुत्तमम् ॥ २ ॥
तत् शृणुष्व प्रवक्ष्यामि यथाधीतं यथाश्रुतम् ।
सर्वकामप्रदं नृणां पापतापविनाशनम् ॥ ३ ॥
शुक उवाच । भल्लाटनगरं त्यक्त्वा विष्णुभक्तः शशिध्वजः ।
आत्मसंसारमोक्षाय मायास्तवमलं जगौ ॥ ४ ॥

शशिध्वज उवाच ।

ओं ह्रींकारां सत्त्वसारां विशुद्धां ब्रह्मादीनां मातरं वेदबोध्याम् ।
तन्वीं स्वाहां भूततन्मात्रकक्षां वन्दे वन्द्यां देवगन्धर्वसिद्धैः ॥५॥
लोकातीतां द्वैतभूतां समीड़े भूतैर्भव्यां व्याससामासिकाद्यैः ।
विद्वद्गीतां कालकल्लोललोलां लीलापाङ्गक्षिप्तसंसारदुर्गाम् ॥६॥

पूर्णां प्राप्यां द्वैतलभ्यां शरण्यामाद्ये शेषे मध्यतो या विभाति ।
नानारूपैर्देवतिर्य्यङ्मनुष्यैस्तामाधारां ब्रह्मरूपां नमामि ॥७॥
यस्या भासा त्रिजगद्भाति भूतैर्न भात्येतत्तदभावे विधातुः ।
कालो दैवं कर्म्म चोपाधयो ये तस्या भासा तां विशिष्टां नमामि॥८
भूमौ गन्धो रसताप्सु, प्रतिष्ठा रूपं तेजस्येव वायौ स्पृशत्वम् ।
खे शब्दो वा यच्चिदाभास्ति नाना तामभ्येतां विश्वरूपां नमामि९
सावित्री त्वं ब्रह्मरूपा भवानी भूतेशस्य, श्रीपतेः श्रीस्वरूपा :
शची शक्रस्यापि नाकेश्वरस्य पत्नी श्रेष्ठा भासि माये ! जगत्सु ॥१०
बाल्ये बाला युवती यौवने त्वं वार्द्धक्ये या स्थविरा कालकल्पा ।
नानाकारैर्योगयोगैरुपास्या ज्ञानातीता कामरूपा विभासि११॥
वरेण्या त्वं वरदा लोकसिद्धा साध्वी धन्या लोकमान्या सुकन्या ।
चण्डी दुर्गा कालिका कालिकाख्या नानादेशे रूपवेशैर्विभासि१२

तव चरणसरोजं देवि ! देवादिवन्द्यं
यदि हृदयसरोजे भावयन्तीह भक्त्या ।
श्रुतियुगकुहरे वा संश्रुतं धर्म्मसम्पत्
जनयति जगदाद्ये ! सर्वसिद्धिञ्च तेषाम् ॥ १३ ॥

मायास्तवमिदं पुण्यं शुकदेवेन भाषितम् ।
मार्कण्डेयादवाप्यापि सिद्धिं लेभे शशिध्वजः ॥ १४ ॥
कोकामुखे तपस्तप्त्वा हरिं ध्यात्वा वनान्तरे ।
सुदर्शनेन निहतो वैकुण्ठं शरणं ययौ ॥ १५ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
मायास्तवो नाम पञ्चदशोऽध्यायः ।

---

## षोड़शोऽध्यायः ।

सूत उवाच । एतद् वः कथितं विप्राः! शशिध्वजविमोक्षणम् ।
कल्केः कथामप्रतिमां शृखन्तु विबुधर्षभाः! ॥ १ ॥
वेदो धर्म्मः कृतयुगं देवा लोकाश्चराचराः ।
हृष्टाः पुष्टाः सुसन्तुष्टाः कल्कौ राजनि चाभवन् ॥ २ ॥
नानादेवादिलिङ्गेषु भूषणैर्भूषितेषु च ।
इन्द्रजालिकवद् वृत्तिकल्पकाः पूजका जनाः ॥ ३ ॥
न सन्ति मायामोहाढ्याः पाषण्डाः साधुवञ्चकाः ।
तिलकार्चितसर्वाङ्गाः कल्कौ राजनि कुत्रचित् ॥ ४ ॥
शम्भले वसतस्तस्य पद्मया रमया सह ।
प्राह विष्णुयशाः पुत्रं देवान् यष्टुं जगद्धितान् ॥ ५ ॥
तच्छ्रुत्वा प्राह पितरं कल्किः परमहर्षितः ।
विनयावनतो भूत्वा धर्म्मकामार्थसिद्धये ॥ ६ ॥
राजसूयैर्वाजपेयैरश्वमेधैर्महामखैः ।
नानायागैः कर्म्मतन्त्रैरीजे क्रतुपतिं हरिम् ॥ ७ ॥
कृपरामवशिष्ठाद्यैर्व्यासधौम्याकृतव्रणैः ।
अश्वत्थाममधुच्छन्दो मन्दपालैर्महात्मनः ॥ ८ ॥
गङ्गायमुनयोर्मध्ये स्नात्वावभृथमादरात् ।
दक्षिणाभिः समभ्यर्च्य ब्राह्मणान् वेदपारगान् ॥ ९ ॥
चर्व्यैश्चोष्यैश्च पेयैश्च पूगशष्कुलियावकैः ।
मधुमांसैर्मूलफलैरन्यैश्च विविधैर्द्विजान् ॥ १० ॥
भोजयामास विधिवत् सर्वकर्म्मसमृद्धिभिः ।
यत्र वह्निर्वृतः पाके वरुणो जलदो मरुत् ॥ ११ ॥

परिविष्टा द्विजान् कामैः सदन्नाद्यैरतोषयत् ।
वाद्यैर्नृत्यैश्च गीतैश्च पितृयज्ञमहोत्सवैः ॥ १२ ॥
कल्किः कमलपत्राक्षः प्रहर्षः प्रददौ वसु ।
स्त्रीबालस्थविरादिभ्यः सर्वेभ्यश्च यथोचितम् ॥ १३ ॥
रम्भा तालधरानन्दी हुहुर्गायति नृत्यति ।
दत्त्वा दानानि पात्रेभ्यो ब्राह्मणेभ्यः स ईश्वरः ॥ १४ ॥
उवास तीरे गङ्गायाः पितृवाक्यानुमोदितः ।
सभायां विष्णुयशसः पूर्वराजकथाः प्रियाः ॥ १५ ॥
कथयन्तो हसन्तश्च हर्षयन्तो द्विजा बुधाः ।
तत्रागतस्तुम्बुरुणा नारदः सुरपूजितः ॥ १६ ॥
तं पूजयामास मुदा पित्रा सह यथाविधि ।
तौ सम्पूज्य विष्णुयशाः प्रोवाच विनयान्वितः ।
नारदं वैष्णवं प्रीत्या वीणापाणिं महामुनिम् ॥ १७ ॥

विष्णुयशा उवाच ।

अहो ! भाग्यमहो ! भाग्यं मम जन्मशतार्जितम् ।
भवद्विधानां पूर्णानां यन्मे मोक्षाय दर्शनम् ॥ १८ ॥
अद्याग्नयश्च सुहुतास्तृप्ताश्च पितरः परम् ।
देवाश्च परिसन्तुष्टास्तवावेक्षणपूजनात् ॥ १९ ॥
यत्पूजायां भवेत् पूज्यो विष्णुर्यन्मदर्शनम् ।
पापसङ्गं स्पर्शनाच्च किमहो ! साधुसङ्गमः ॥ २० ॥
साधूनां हृदयं धर्म्मो वाचो देवाः सनातनाः ।
कर्म्मक्षयाणि कर्म्माणि यतः साधुर्हरिः स्वयम् ॥ २१ ॥
मन्ये न भौतिको देहो वैष्णवस्य जगत्त्रये ।
यथावतारे कृष्णस्य सतो दुष्टविनिग्रहे ॥ २२ ॥

पृच्छामि त्वामतो ब्रह्मन् ! मायासंसारवारिधौ।
नौकायां विष्णुभक्त्या च कर्णधारोऽसि पारकृत् ॥ २३ ॥
केनाहं यातनागारात् निर्वाणपदमुत्तमम्।
लप्स्यामीह जगद्बन्धो ! कर्म्मणा शर्म्म तद्वद ॥ २४ ॥
नारद उवाच। अहो ! बलवती माया सर्वाश्चर्य्यमयी शुभा।
पितरं मातरं विष्णुर्नैव मुञ्चति कर्हिचित् ॥ २५ ॥
पूर्णो नारायणो यस्य सुतः कल्किर्जगत्पतिः।
तं विहाय विष्णुयशा मत्तो मुक्तिमभीप्सति ॥ २६ ॥
विविच्येत्थं ब्रह्मसुतः प्राह ब्रह्मयशःसुतम्।
विविक्ते विष्णुयशसं ब्रह्मसम्पद्विवर्द्धनम् ॥ २७ ॥
नारद उवाच। देहावसाने जीवं सा दृष्ट्वा देहावलम्बनम्।
मायाह कर्त्तुमिच्छन्तं यन्मे तत् शृणु मोक्षदम् ॥ २८ ॥
विन्ध्याद्रौ रमणी भूत्वा मायोवाच यथेच्छया ॥ २९ ॥
मायोवाच। अहं माया मया त्यक्तः कथं जीवितुमिच्छसि।
जीव उवाच। नाहं जीवाम्यहं माये! कायेऽस्मिन् जीवनाश्रये।
अहमित्यन्यथाबुद्धिर्विना देहं कथं भवेत् ॥ ३० ॥
मायोवाच। देहबन्धे यथा श्लेषात् तथा बुद्धिः कथं तव।
मायाधीनां विना चेष्टां विशिष्टां ते कुतो वद ॥ ३१ ॥
जीव उवाच। मां विना प्राज्ञता माये! प्रकाशविषयस्पृहा ३२
मायोवाच। मायया जीवति नरश्चेष्टते हतचेतनः।
निःसारः सारवद् भाति गजभुक्तकपित्थवत् ॥ ३३ ॥
जीव उवाच। मम संसर्गजाता त्वं नानानामस्वरूपिणी।
मां विनिन्दसि किं मूढ़े ! स्वैरिणी स्वामिनं यथा॥३४॥
ममाभावे तवाभावः प्रोद्यत्सूर्य्ये तमो यथा।

मामावर्थ्य विभासि त्वं रविं नवघनो यथा ॥ ३५ ॥
लीलावीजकुशूलासि मम माये ! जगन्मये ! ।
नाद्यन्ते मध्यतो भासि नानात्वादिन्द्रजालवत् ॥ ३६ ॥
एवं निर्विषयं नित्यं मनोव्यापारवर्जितम् ।
अभौतिकमजीवञ्च शरीरं वीच्य सात्यजत् ॥ ३७ ॥
त्यक्का मां सा ददौ शापमिति लोके तवाप्रिय ! ।
न स्थितिर्भविता काष्ठकुड्योपम ! कथञ्चन ॥ ३८ ॥
सा माया तव पुत्रस्य कल्केर्विश्वात्मन: प्रभो: ।
तां विज्ञाय यथाकामं चर गां हरिभावन: ॥ ३९ ॥
निराशो निर्मम: शान्त: सर्वभोगेषु निष्पृह: ।
विष्णौ जगदिदं ज्ञात्वा विष्णुर्जगति वासकृत् ।
आत्मनात्मानमावेश्य सर्वतो विरतो भव ॥ ४० ॥
एवं तं विष्णुयशसमामन्त्र च मुनीश्वरौ ।
कल्किं प्रदक्षिणीकृत्य जग्मतु: कपिलाश्रमम् ॥ ४१ ॥
नारदेरितमाकर्ण्य कल्किं सुतमनुत्तमम् ।
नारायणं जगन्नाथं वनं विष्णुयशा ययौ ॥ ४२ ॥
गत्वा वदरिकारण्यं तपस्तप्ता सुदारुणम् ।
जीवं ब्रह्मति संयोज्य पूर्णस्तत्याज भौतिकम् ॥ ४३ ॥
मृतं स्वामिनमालिङ्ग्य सुमति: स्नेहविक्लवा ।
विवेश दहनं साध्वी सुवेशैर्दिवि संस्तुता ॥ ४४ ॥
कल्कि: श्रुत्वा मुनिमुखात् पित्रोर्निर्याणमीश्वर: ।
सवास्पनयनं स्नेहात् तयो: समकरोत् क्रियाम् ॥ ४५ ॥
पद्मया रमया कल्कि: शम्भले सुरवाञ्छिते ।
चकार राज्यं धर्म्मात्मा लोकवेदपुरस्कृत: ॥ ४६ ॥

महेन्द्रशिखराद्रामस्तीर्थपर्य्यटनाद्दतः।
प्रायात् कल्कि दर्शनार्थं शम्भलं तीर्थतीर्थकृत् ॥ ४७ ॥
तं दृष्ट्वा सहोत्थाय पद्मया रमया सह।
कल्किः प्रहर्षो विधिवत् पूजाञ्चक्रे विधानवित् ॥ ४८ ॥
नानारसैर्गुणमयैर्भोजयित्वा विचित्रिते।
पर्य्यङ्केऽनर्घवस्त्राढ्ये शाययित्वा मुदं ययौ ॥ ४९ ॥
तं भुक्तवन्तं विश्रान्तं पादसंवाहनैर्गुरुम्।
सन्तोष्य विनयापन्नः कल्किर्मधुरमब्रवीत् ॥ ५० ॥
तव प्रसादात् सिद्धं मे गुरो! त्रैवर्गिकञ्च यत्।
शशिध्वजसुतायास्तु शृणु राम! निवेदितम् ॥ ५१ ॥

इति पतिवचनं निशम्य रामा
निजहृदयेप्सितपुत्रलाभमिष्टम्।
व्रतजपनियमैर्यमैश्च कैर्वा
मम भवतीह मुदाह जामदग्न्यम् ॥ ५२ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे विष्णुयशसो मोक्षो रामदर्शनं नाम षोड़शोऽध्यायः।

---

## सप्तदशोऽध्यायः।

सूत उवाच। जामदग्न्यः समाकर्ण्य रमां तां पुत्रगर्द्धिनीम्।
कल्केरभिमतं बुद्ध्वाकारयद्रुक्मिणीव्रतम् ॥ १ ॥
व्रतेन तेन च रमा पुत्राढ्या सुभगा सती।
सर्वभोगेन संयुक्ता बभूव स्थिरयौवना ॥ २ ॥

शौनक उवाच।

विधानं ब्रूहि मे सूत ! व्रतस्यास्य च यत् फलम्।
पुरा केन कृतं धर्म्यं रुक्मिणीव्रतमुत्तमम्॥ ३॥
सूत उवाच। शृणु ब्रह्मन् ! राजपुत्री शर्मिष्ठा वार्षपर्वणी।
अवगाह्य सरोनीरं सोमं हरमपश्यत॥ ४॥
सा सखीभिः परिवृता देवयान्या च सङ्गता।
शम्भुभीत्या समुत्थाय पर्य्यधुर्वसनं द्रुतम्॥ ५॥
तत्र शुक्रस्य कन्याया वस्त्रव्यत्ययमात्मनः।
संलक्ष्य कुपिता प्राह वसनं त्यज भिक्षुकि !॥ ६॥
इति दानवकन्या सा दासीभिः परिवारिता।
तां तस्या वाससा बद्ध्वा कूपे क्षिप्त्वा गता गृहम्॥ ७॥
तां मग्नां रुदतीं कूपे जलार्थी नहुषात्मजः।
करे स्पृश्य समुद्धृत्य प्राह का? त्वं वरानने !॥ ८॥
सा शुक्रपुत्री वसनं परिधाय ह्रिया भिया।
शर्मिष्ठायाः कृतं सर्वं प्राह राजानमीक्षती॥ ९॥
ययातिस्तदभिप्रायं ज्ञात्वानुव्रज्य शोभनम्।
आश्वास्य तां ययौ गेहं तस्याः परिणयाद्दतः॥ १०॥
सा मत्वा भवनं शुक्रं प्राह शर्मिष्ठया कृतम्।
तच्छ्रुत्वा कुपितं विप्रं वृषपर्वाह सान्त्वयन्॥ ११॥
दण्ड्य' मां दण्डय विभो ! कोपो यद्यस्ति ते मयि।
शर्मिष्ठां वाप्यपकृतां कुरु यन्मनसेप्सितम्॥ १२॥
राजानं प्रणतं पादे पितुर्दृष्ट्वा रुषाब्रवीत्।
देवयानी त्वियं कन्या मम दासी भवत्विति॥ १३॥
समानीय तदा राजा दास्ये तां विनियुज्य सः।

ययौ निजगृहं ज्ञानी देवं परमकं स्मरन् ॥ १४ ॥
ततः शुक्रस्तमानीय ययातिं प्रतिलोमकम् ।
तस्मै ददौ तां विधिवत् देवयानीं तया सह ॥ १५ ॥
दत्त्वा प्राह नृपं विप्रोऽप्येनां राजसुतां यदि ।
शयने ह्वयसे सद्यो जरा त्वामुपभोक्ष्यति ॥ १६ ॥
शुक्रस्यैतद्वचः श्रुत्वा राजा तां वरवर्णिनीम् ।
अट्टम्यां स्थापयामास देवयान्यनुगां भिया ॥ १७ ॥
सा शर्मिष्ठा राजपुत्री दुःखशोकभयाकुला ।
नित्यं दासीशताकीर्णा देवयानीन्तु सेवते ॥ १८ ॥
एकदा सा वनगता रुदती जाह्नवीतटे ।
विश्वामित्रं मुनिं सा तं ददृशे स्त्रीभिरावृतम् ॥ १९ ॥
व्रतिनं पुण्यगन्धाभिः सुरूपाभिः सुवासितम् ।
कारयन्तं व्रतं माल्यधूपदीपोपहारकैः ॥ २० ॥
निर्माायाष्टदलं पद्मं वेदिकायां सुचिह्नितम् ।
रम्भापोतैश्चतुर्भिस्तु चतुष्कोणं विराजितम् ॥ २१ ॥
वाससा निर्मितगृहे स्वर्णपट्टैर्विचित्रिते ।
निर्मितं श्रीवासुदेवं नानारत्नविघट्टितम् ॥ २२ ॥
पौरुषेण च सूक्तेन नानागन्धोदकैः शुभैः ।
पञ्चामृतैः पञ्चगव्यैर्यथामन्त्रैर्द्विजेरितैः ॥ २३ ॥
स्नापयित्वा भद्रपीठे कर्णिकायां प्रपूजयेत् ।
पञ्चभिर्दशभिर्वापि षोड़शैरुपचारकैः ॥ २४ ॥
पाद्यमर्घ्यं श्रमहरं शीतलं सुमनोहरम् ।
परमानन्दजनकं गृहाण परमेश्वर ! ॥ २५ ॥
दूर्वाचन्दनगन्धाढ्यमर्घ्यं युक्तं प्रयत्नतः ।

गृहाण रुक्मिणीनाथ ! प्रसन्नस्य मम प्रभो ! ॥ २६ ॥
नानातीर्थोद्भवं वारि सुगन्धि सुमनोहरम् ।
गृहाणाचमनीयं त्वं श्रीनिवास ! श्रिया सह ॥ २७ ॥
नानाकुसुमगन्धाढ्यं सूत्रग्रथितमुत्तमम् ।
वक्षःशोभाकरं चारु माल्यं नय सुरेश्वर ! ॥ २८ ॥
तन्तुसन्तानसन्धानरचितं बन्धनं हरे ! ।
गृहाणावरणं शुद्धं निरावरण ! सप्रिय ! ॥ २९ ॥
यज्ञसूत्रमिदं देव ! प्रजापतिविनिर्मितम् ।
गृहाण वासुदेव ! त्वं रुक्मिण्या रमया सह ॥ ३० ॥
नानारत्नसमायुक्तं स्वर्णमुक्ताविघट्टितम् ।
प्रियया सह देवेश ! गृहाणाभरणं मम ॥ ३१ ॥
दधिक्षीरगुड़ान्नादिपूपलड्डुकखण्डकान् ।
गृहाण रुक्मिणीनाथ ! सनाथं कुरु मां प्रभो ! ॥३२॥
कर्पूरागुरुगन्धाढ्यं परमानन्ददायकम् ।
धूपं गृहाण वरद ! वैदर्भ्या प्रियया सह ॥ ३३ ॥
भक्तानां गेहशक्तानां संसारध्वान्तनाशनम् ।
दीपमालोकय विभो ! जगदालोकनादर ! ॥ ३४ ॥
श्यामसुन्दर ! पद्माक्ष ! पीताम्बर ! चतुर्भुज ! ।
प्रपन्नं पाहि देवेश ! रुक्मिण्या सहिताच्युत ! ॥ ३५ ॥
इति तासां व्रतं दृष्ट्वा मुनिं नत्वा सुदुःखिता ।
शर्म्मिष्ठा मिष्टवचना कृताञ्जलिरुवाच ताः ॥ ३६ ॥
शर्म्मिष्ठोवाच । राजपुत्रीं दुर्भगां मां स्वामिना परिवर्जिताम् ।
त्रातुमर्हथ हे देव्यो ! व्रतेनानेन कर्म्मणा ॥ ३७ ॥
श्रुत्वा तु ता वचस्तस्याः कारुण्याच्च कियत् कियत् ।

पूजोपकरणं दत्त्वा कारयामासुरादरात् ॥ ३८ ॥
व्रतं कृत्वा तु शर्मिष्ठा लब्ध्वा स्वामिनमीश्वरम् ।
सूत्वा पुत्रान् सुसन्तुष्टा समभूत् स्थिरयौवना ॥ ३९ ॥
सीता चाशोकवनिकामध्ये सरमया सह ।
व्रतं कृत्वा पतिं लेभे रामं राक्षसनाशनम् ॥ ४० ॥
बृहदश्वप्रसादेन कृत्वेमं द्रौपदी व्रतम् ।
पतियुक्ता दुःखमुक्ता बभूव स्थिरयौवना ॥ ४१ ॥
तथा रमा सिते पक्षे वैशाखे द्वादशी दिने ।
जामदग्न्याद् व्रतं चक्रे पूर्णं वर्षचतुष्टयम् ॥ ४२ ॥
पट्टसूत्रं करे बद्ध्वा भोजयित्वा द्विजान् बहून् ।
भुक्त्वा हविष्यं क्षीरान्नं सुमृष्टं स्वामिना सह ॥ ४३ ॥
बुभुजे पृथिवीं सर्वामपूर्वां स्वजनैर्वृता ।
सा पुत्रौ सुषुवे साध्वी मेघमालबलाहकौ ॥ ४४ ॥
देवानामुपकर्त्तारौ यज्ञदानतपोव्रतैः ।
महोत्साहौ महावीर्य्यौ सुभगौ कल्किसम्मतौ ॥ ४५ ॥

व्रतवरमिति कृत्वा सर्वसम्पत्समृद्धा
भवति विदिततत्त्वा पूजिता पूर्णकामा ।
हरिचरणसरोजद्वन्द्वभक्त्यैकताना
व्रजति गतिमपूर्वां ब्रह्मविद्भिरगम्याम् ॥ ४६ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
रुक्मिणीव्रतं नाम सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः ।

सूत उवाच । एतद् वः कथितं विप्रा! व्रतं त्रैलोक्यविश्रुतम् ।
अतःपरं कल्किकृतं कर्म्म यत् शृणुत द्विजाः ! ॥ १ ॥
शम्भले वसतस्तस्य सहस्रपरिवत्सराः ।
व्यतीता भ्रातृपुत्रस्वज्ञातिसम्बन्धिभिः सह ॥ २ ॥
शम्भले शुशुभे श्रेणी सभापणकचत्वरैः ।
पताकाध्वजचित्राद्यैर्यथेन्द्रस्यामरावती ॥ ३ ॥
यत्राष्टषष्टितीर्थानां सम्भवः शम्भलेऽभवत् ।
मृत्योर्मोक्षः क्षितौ कल्केरकल्कस्य पदाश्रयात् ॥ ४ ॥
वनोपवनसन्ताननानाकुसुमसङ्कुलैः ।
शोभितं शम्भलं ग्रामं मन्ये मोक्षप्रदं भुवि ॥ ५ ॥
तत्र कल्किः पुरस्त्रीणां नयनानन्दवर्द्धनः ।
पद्मया रमया कामं रराम जगतीपतिः ॥ ६ ॥
सुराधिपप्रदत्तेन कामगेन रथेन वै ।
नदीपर्वतकुञ्जेषु द्वीपेषु परया मुदा ॥ ७ ॥
रममाणो विशन् पद्मारमाद्याभीरमापतिः ।
दिवानिशं न बुबुधे स्त्रैणश्च कामलम्पटः ॥ ८ ॥
पद्मामुखामोदसरोजसीधुवासोपभोगी सुविलासवासः ।
प्रभूतनीलेन्द्रमणिप्रकाशे गुहाविशेषे प्रविवेश कल्किः ॥ ९ ॥
पद्मा तु पद्माशतरूपरूपा रमा च पीयूषकलाविलासा ।
पतिं प्रविष्टं गिरिगह्वरे ते नारीसहस्राकुलिते त्वगाताम् ॥ १० ॥
पद्मा पतिं प्रेक्ष्य गुहानिविष्टं रन्तुं मनोज्ञा प्रविवेश पश्चात् ।
रमाबलायूथसमन्विता तत्पश्चाद्गता कल्किमहोग्रकामा ॥ ११ ॥

ततेन्द्रनीलोत्पलगह्वरान्ते कान्ताभिरात्मप्रतिमाभिरीशम् ।
कल्किञ्च दृष्ट्वा नवनीरदाभं ततः स्थितं प्रस्तरवन्मुमोह ॥१२॥
रमा सखीभिः प्रमदाभिरार्त्ता विलोकयन्ती दिशमाकुलाक्षी ।
पद्मापि पद्माशतशोभमाना विषण्णचित्ता न बभौ स्म चार्त्ता ॥१३॥
भूमौ लिखन्ती निजकज्जलेन कल्किं शुकं तं कुचकुङ्कुमेन ।
कस्तूरिकाभिस्तु तदग्रमग्रे निर्माय चालिङ्ग्य ननाम भावात् १४
रमा कलालापपरा स्तुवन्ती कामार्दिता तं हृदये निधाय ।
ध्यात्वा निजालङ्करणैः प्रपूज्य तस्थौ विषण्णा करुणावसन्ना १५
क्षणात् समुत्थाय रुरोद रामा कलापिनः कण्ठनिभं स्वनायम् ।
हृदोपगूढं न पुनः प्रलभ्य कामार्दितेत्याह हरे प्रसीद ॥१६॥
पद्मापि निर्मुच्य निजाङ्गभूषाश्चकार धूलिपटले विलासम् ।
कण्ठञ्च कस्तूरिकयापि नीलं कामं निहन्तुं शिवतामुपेत्य ॥१७
कलावतीनां कलयाकलय्य क्षीणेक्षणानां हरिरार्त्तबन्धुः ।
कामप्रपूराय ससार मध्ये कल्किः प्रियाणां सुरतोत्सवाय ॥१८॥
ताः सादरेणात्मपतिं मनोज्ञाः करेणवो यूथपतिं ययेयुः ।
सानन्दभावा विषदानुवृत्ता वनेषु रामाः परिपूर्णकामाः ॥१९॥
वैभ्राजके चैत्ररथे सुपुष्पे सुनन्दने मन्दरकन्दरान्ते ।
रेमे स रामाभिरुदारतेजा रथेन भास्वत्खगमेन कल्किः ॥२०॥
पद्मामुखाब्जामृतपानमत्तो रमासमालिङ्गनवासरङ्गी ।
वराङ्गनानां कुचकुङ्कुमाक्तो रतिप्रसङ्गे विपरीतयुक्तः ।
मुखे विदष्टो रसनावशिष्टामोदः स कल्किर्न हि वेद देहम् २१
रमाः समानाः पुरुषोत्तमं तं वक्षोजमध्ये विनिधाय धीराः ।
परस्परश्लेषणजातहासा रेमुर्मुकुन्दं विलसत् शरीराः ॥ २२ ॥

ततः सरोवरं त्वरा स्त्रियो ययुः क्लमज्वराः

प्रियेण तेन कल्किना वनान्तरे विहारिणा ।
सरः प्रविश्य पद्मया विमोहरूपया तया
जलं ददुर्वराङ्गनाः करेणवो यथा गजम् ॥ २३ ॥
इति ह युवतिलीला लोकनाथः स कल्किः
प्रिययुवतिपरीतः पद्मया रामयाद्यः ॥
निजरमणविनोदैः शिक्षयन् लोकवर्गान्
जयति विबुधभर्त्ता शम्भले वासुदेवः ॥ २४ ॥
ये शृखन्ति वदन्ति भावचतुरा ध्यायन्ति सन्तः सदा
कल्केः श्रीपुरुषोत्तमस्य चरितं कर्णामृतं सादराः ।
तेषां नो सुखयत्ययं मुररिपोर्दास्याभिलाषं विना
संसारः परिमोचनञ्च परमानन्दामृताम्भोनिधेः ॥ २५ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
कल्किवर्णनं नाम अष्टादशोऽध्यायः ।

---

## ऊनविंशोऽध्यायः ।

सूत उवाच । ततो देवगणाः सर्वे ब्रह्मणा सहिता रथैः ।
स्वैः स्वैर्गणैः परिवृताः कल्किं द्रष्टुमुपाययुः ॥ १ ॥
महर्षयः सगन्धर्वाः किन्नराश्चाप्सरोगणाः ।
समाजग्मुः प्रमुदिताः शम्भलं सुरपूजितम् ॥ २ ॥
तत्र गत्वा सभामध्ये कल्किं कमललोचनम् ।
तेजोनिधिं प्रपन्नानां जनानामभयप्रदम् ॥ ३ ॥
नीलजीमूतसङ्काशं दीर्घपीवरबाहुकम् ।
किरीटेनार्कवर्णेन स्थिरविद्युन्निभेन तम् ॥ ४ ॥

शोभमानं द्युमणिना कुण्डलेनाभिशोभिना ।
सहर्षालापविकसद्वदनं स्मितशोभिनम् ॥ ५ ॥
कृपाकटाक्षविक्षेपपरिच्छिन्नविपक्षकम् ।
तारहारोल्लसद्वक्षश्चन्द्रकान्तमणिश्रिया ॥ ६ ॥
कुमुद्वतीमोदवहं स्फुरत्शक्रायुधाम्बरम् ।
सर्वदानन्दसन्दोहरसोल्लसितविग्रहम् ॥ ७ ॥
नानामणिगणोद्योतदीपितं रूपमद्भुतम् ।
ददृशुर्देवगन्धर्वा ये चान्ये समुपागताः ॥ ८ ॥
भक्त्या परमया युक्ताः परमानन्दविग्रहम् ।
कल्किं कमलपत्राक्षं तुष्टुवुः परमादरात् ॥ ९ ॥

देवा ऊचुः । जयाशेषसंक्लेशकक्षप्रकीर्णानलोद्दामसङ्कीर्ण! हीश!।
देवेश ! विश्वेश ! भूतेश ! भावः ।
तवानन्त चान्तःस्थितोऽङ्गाम्नरत्न-
प्रभाभातपादाजितानन्तशक्ते ! ॥ १० ॥
प्रकाशीकृताशेषलोकत्रयात्र
वक्षःस्थले भास्वत्कौस्तुभश्याम ! ।
मेघौघराजत्शरीरद्विजाधीशपुञ्जानन !
त्राहि विष्णो ! सदाराः वयं त्वां प्रपन्ना सशेषाः ॥११॥
यद्यस्त्यनुग्रहोऽस्माकं व्रज वैकुण्ठमीश्वर ! ।
त्यक्त्वा शासितभूतखण्डं सत्यधर्माविरोधतः ॥ १२ ॥
कल्किस्तेषामिति वचः श्रुत्वा परमहर्षितः ।
पात्रमित्रैः परिवृतश्चकार गमने मतिम् ॥ १३ ॥
पुत्रानाहूय चतुरो महाबलपराक्रमान् ।
राज्ये निक्षिप्य सहसा धर्मिष्ठान् प्रकृतिप्रियान् ॥ १४ ॥

ततः प्रजाः समाहूय कथयित्वा निजाः कथाः ।
प्राह तान् निजनिर्याणं देवानामनुपरोधतः ॥ १५ ॥
तच्छ्रुत्वा ताः प्रजाः सर्वा रुरुदुर्विस्मयान्विताः ।
तं प्राहुः प्रणताः पुत्रा तथा पितरमीश्वरम् ॥ १६ ॥
प्रजा ऊचुः। भो नाथ ! सर्वधर्मज्ञ ! नास्मान् त्यक्तुमिहार्हसि ।
यत्र त्वं तत्र तु वयं यामः प्रणतवत्सल ! ॥ १७ ॥
प्रिया गृहा धनान्यत्र पुत्राः प्राणास्तवानुगाः ।
परत्रेह विशोकाय ज्ञात्वा त्वां यज्ञपूरुषम् ॥ १८ ॥
इति तद्वचनं श्रुत्वा सान्त्वयित्वा सदुक्तिभिः ।
प्रययौ क्लिन्नहृदयः पत्नीभ्यां सहितो वनम् ॥ १९ ॥
हिमालयं मुनिगणैराकीर्णं जाह्नवीजलैः ।
परिपूर्णं देवगणैः सेवितं मनसः प्रियम् ॥ २० ॥
गत्वा विष्णुः सुरगणैर्वृतश्चारुचतुर्भुजः ।
उषित्वा जाह्नवीतीरे सस्मारात्मानमात्मना ॥ २१ ॥
पूर्णज्योतिर्मयः साक्षी परमात्मा पुरातनः ।
बभौ सूर्य्यसहस्राणां तेजोराशिसमद्युतिः ॥ २२ ॥
शङ्खचक्रगदापद्मशार्ङ्गाद्यैः समभिष्टुतः ।
नानालङ्करणानाञ्च समलङ्करणाकृतिः ॥ २३ ॥
ववृषुस्तं सुराः पुष्पैः कौस्तुभामुक्तकन्धरम् ।
सुगन्धिकुसुमासारैर्देवदुन्दुभिनिस्वनैः ॥ २४ ॥
तुष्टुवुर्मुमुहुः सर्वे लोकाः सस्थाणुजङ्गमाः ।
दृष्ट्वा रूपमरूपस्य निर्याणे वैष्णवं पदम् ॥ २५ ॥
तद्दृष्ट्वा महदाश्चर्य्यं पत्युः कल्केर्महात्मनः ।
रमा पद्मा च दहनं प्रविश्य तमवापतुः ॥ २६ ॥

धर्म्मः कृतयुगं कल्केराज्ञया पृथिवीतले ।
निःसपत्नौ सुसुखिनौ भूलोकं चेरतुश्चिरम् ॥ २७ ॥
देवापिश्च मरुः कामं कल्केरादेशकारिणौ ।
प्रजाः सम्पालयन्तौ तु भुवं जुगुपतुः प्रभू ॥ २८ ॥
विशाखयूपभूपालः कल्केर्निर्याणमीदृशम् ।
श्रुत्वा स्वपुत्रं विषये नृपं कृत्वा गतो वनम् ॥ २९ ॥
अन्ये नृपतयो ये च कल्केर्विरहकर्षिताः ।
तं ध्यायन्तो जपन्तश्च विरक्ताः स्युर्नृपासने ॥ ३० ॥
इति कल्केरनन्तस्य कथां भुवनपावनीम् ।
कथयित्वा शुकः प्रायात् नरनारायणाश्रमम् ॥ ३१ ॥
मार्कण्डेयादयो ये च मुनयः प्रशमायनाः ।
श्रुत्वानुभावं कल्केस्ते तं ध्यायन्तो जगुर्यशः ॥ ३२ ॥
यस्यानुशासनात् भूमौ नाधर्मिष्ठाः प्रजा जनाः ।
नाल्पायुषो दरिद्राश्च न पाषण्डा न हैतुकाः ॥ ३३ ॥
नाधयो व्याधयः क्लेशा दैवभूतात्मसम्भवाः ।
निर्मत्सराः सदानन्दा बभूवुर्जीवजातयः ॥ ३४ ॥
इत्येतत् कथितं कल्केरवतारं महोदयम् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ ३५ ॥
शोकसन्तापपापघ्नं कलिव्याकुलनाशनम् ।
सुखदं मोक्षदं लोके वाञ्छितार्थफलप्रदम् ॥ ३६ ॥
तावत् शास्त्रप्रदीपानां प्रकाशो भुवि रोचते ।
भक्तिभानुपुराणाख्या यावत् लोकेऽतिकामधुक् ॥ ३७ ॥
श्रुत्वैतत् भृगुवंशजो मुनिगणैः सार्कं सहर्षो वशी
ज्ञात्वा सूतममेयबोधविदितं श्रीलोमहर्षात्मजम् ।

श्रीकल्केरवतारवाक्यममलं भक्तिप्रदं श्रीहरेः
शुश्रूषुः पुनराह साधुवचसा गङ्गास्तवं सत्व्रतः ॥ ३८ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
कल्किनिर्याणं नाम ऊनविंशोऽध्यायः।

---

## विंशोऽध्यायः।

शौनक उवाच। हे सूत ! सर्वधर्म्मज्ञ ! यत्त्वया कथितं पुरा।
गङ्गां स्तुत्वा समायाता मुनयः कल्किसन्निधिम् ॥ १ ॥
स्तवं तं वद गङ्गायाः सर्वपापप्रणाशनम्।
मोक्षदं शुभदं भक्त्या शृण्वतां पठतामिह ॥ २ ॥
सूत उवाच। शृणुध्वमृषयः ! सर्वे ! गङ्गास्तवमनुत्तमम्।
शोकमोहहरं पुंसां ऋषिभिः परिकीर्त्तितम् ॥ ३ ॥
ऋषय ऊचुः। इयं सुरतरङ्गिणी भुवनवारिधेस्तारिणी
स्तुता हरिपदाम्बुजादुपगता जगत्संसदः।
सुमेरुशिखरामरप्रियजला मलक्षालनी
प्रसन्नवदना शुभा भवभयस्य विद्रावणी ॥ ४ ॥
भगीरथमथानुगा सुरकरीन्द्रदर्पापहा
महेशमुकुटप्रभा गिरिशिरःपताका सिता।
सुरासुरनरोरगैरजभवाच्युतैः संस्तुता
विमुक्तिफलशालिनी कलुषनाशिनी राजते ॥ ५ ॥
पितामहकमण्डलुप्रभवमुक्तिवीजा लता
श्रुतिस्मृतिगणस्तुतद्विजकुलालबालावृता।
सुमेरुशिखराभिदा निपतिता त्रिलोकावृता
सुधर्म्मफलशालिनी सुखपलाशिनी राजते ॥ ६ ॥

चरद्विहगमालिनी सगरवंशमुक्तिप्रदा
मुनीन्द्रवरनन्दिनी दिवि मता च मन्दाकिनी ।
सदा दुरितनाशिनी विमलवारिसन्दर्शन-
प्रणामगुणकीर्त्तनादिषु जगत्सु संराजते ॥ ७ ॥

महाभिषसुताङ्गना हिमगिरीशकूटस्तना
सफेनजलहासिनी सितमरालसञ्चारिणी ।
चलल्लहरसत्करा वरसरोजमालाधरा
रसोल्लसितगामिनी जलधिकामिनी राजते ॥ ८ ॥

क्वचिन्मुनिगणैः स्तुता क्वचिदनन्तसम्पूजिता
क्वचित् कलकलस्वना क्वचिदधीरयादोगणा ।
क्वचिद्रविकरोज्ज्वला क्वचिदुदग्रपाताकुला
क्वचिज्जनविगाहिता जयति भीष्ममाता सती ॥ ९ ॥

स एव कुशली जनः प्रणमतीह भागीरथीं
स एव तपसां निधिर्जपति जाह्नवीमादरात् ।
स एव पुरुषोत्तमः स्मरति साधु मन्दाकिनीं
स एव विजयी प्रभुः सुरतरङ्गिणीं सेवते ॥ १० ॥

तवामलजलार्चितं खगसृगालमीनक्षतं
चलल्लहरिलोलितं रुचिरतीरजम्बालितम् ।
कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतो-
ऽप्यहं त्रिपथगामिनी प्रियमतीव पश्याम्यहो ! ॥ ११ ॥

त्वत्तीरे वसतिं तवामलजलस्नानं तव प्रेक्षणं
त्वन्नामस्मरणं तवोदयकथासंलापनं पावनम् ।
गङ्गे ! मे तव सेवनैकनिपुणोऽप्यानन्दितश्चादृतः
स्तुत्वा त्वोद्गतपातको भुवि कदा शान्तश्चरिष्याम्यहम् ॥१२॥

इत्येतदृषिभिः प्रोक्तं गङ्गास्तवमनुत्तमम् ।
स्वर्ग्यं यशस्यमायुष्यं पठनात् श्रवणादपि ॥ १३ ॥
सर्वपापहरं पुंसां बलमायुर्विवर्द्धनम् ।
प्रातर्मध्याह्नसायाह्ने गङ्गासान्निध्यता भवेत् ॥ १४ ॥
इत्येतत् भार्गवाख्यानं शुकदेवात् मया श्रुतम् ।
पठितं श्रावितं चात्र पुण्यं धन्यं यशस्करम् ॥ १५ ॥
अवतारं महाविष्णोः कल्केः परममद्भुतम् ।
पठतां शृण्वतां भक्त्या सर्वाशुभविनाशनम् ॥ १६ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
गङ्गास्तवो नाम विंशोऽध्यायः ।

---

## एकविंशोऽध्यायः ।

सूत उवाच । अत्रापि शुकसंवादो मार्कण्डेयेन धीमता ।
अधर्म्मवंशकथनं कलेर्विवरणं ततः ॥ १ ॥
देवानां ब्रह्मसदनप्रयाणं गोभुवा सह ।
ब्रह्मणो वचनाद्विष्णोर्जन्म विष्णुयशोगृहे ॥ २ ॥
सुमत्यां स्वांशकैर्भ्रातृचतुर्भिः शम्भले पुरे ।
पितुः पुत्रेण संवादस्तथोपनयनं हरेः ॥ ३ ॥
पुत्रेण सह संवासो वेदाध्ययनमुत्तमम् ।
शस्त्रास्त्राणां परिज्ञानं शिवसन्दर्शनं ततः ॥ ४ ॥
कल्केस्तवं शिवपुरो वरलाभः शुकापनम् ।
शम्भलागमनं चक्रे ज्ञातिभ्यो वरकीर्त्तनम् ॥ ५ ॥
विशाखयूपभूपेन निजसर्वात्मवर्णनम् ।
महाभागात् ब्राह्मणानां शुकस्यागमनं ततः ॥ ६ ॥

कल्किना शुकसंवादः सिंहलाख्यानमुत्तमम् ।
शिवदत्तवरा पद्मा तस्या भूपस्वयंवरे ॥ ७ ॥
दर्शनात् भूपसङ्घानां स्त्रीभावपरिकीर्त्तनम् ।
तस्या विषादः कल्केस्तु विवाहार्थं समुद्यमः ॥ ८ ॥
शुकप्रस्थापनं दौत्ये तया तस्यापि दर्शनम् ।
शुकपद्मापरिचयः श्रीविष्णोः पूजनादिकम् ॥ ९ ॥
पादादिदेहध्यानञ्च केशान्तपरिवर्णितम् ।
शुकभूषणदानञ्च पुनः शुकसमागमः ॥ १० ॥
कल्केः पद्माविवाहार्थं गमनं दर्शनं तयोः ।
जलक्रीड़ाप्रसङ्गेन विवाहस्तदनन्तरम् ॥ ११ ॥
पुंस्त्वप्राप्तिश्च भूपानां कल्केर्दर्शनमात्रतः ।
अनन्तागमनं राज्ञां संवादस्तेन संसदि ॥ १२ ॥
षण्डत्वादात्मनो जन्म कर्म्म चात्र शिवस्तवः ।
मृते पितरि तद्विष्णोः क्षेत्रे मायाप्रदर्शनम् ॥ १३ ॥
अत्राख्यानमनन्तस्य ज्ञानवैराग्यवैभवम् ।
राज्ञां प्रयाणं कल्केश्च पद्मया सह शम्भले ॥ १४ ॥
विश्वकर्म्मविधानञ्च वसतिः पद्मया सह ।
ज्ञातिभ्रातृसुहृत्पुत्रैः सेनाभिर्बुद्धनिग्रहः ॥ १५ ॥
कथितश्चात्र तेषाञ्च स्त्रीणां संयोधनाश्रयः ।
ततोऽत्र बालखिल्यानां मुनीनां स्वनिवेदनम् ॥ १६ ॥
सपुत्रायाः कुथोदर्य्या वधश्चात्र प्रकीर्त्तितः ।
हरिद्वारगतस्यापि कल्केर्मुनिसमागमः ॥ १७ ॥
सूर्य्यवंशस्य कथनं सोमस्य च विधानतः ।
श्रीरामचरितं चारु सूर्य्यवंशानुवर्णने ॥ १८ ॥

देवापेश्च ! मरोः ! सङ्गो युद्वायात्र प्रकीर्त्तितः।
महाघोरवने कोक-विकोकविनिपातनम्॥ १९॥
भल्लाटगमनं तत्र शय्याकर्णादिभिः सह।
युद्वं शशिध्वजेनात्र सुशान्ताभक्तिकीर्त्तनम्॥ २०॥
युद्धे कल्केरानयनं धर्म्मस्य च कृतस्य च।
सुशान्तायाः स्तवस्तत्र रमोद्वाहस्तु कल्किना॥ २१॥
सभायां पूर्वकथनं निजगृध्रत्वकारणम्।
मोक्षः शशिध्वजस्यात्र भक्तिप्रार्थयितुर्विभोः॥ २२॥
विषकन्याविमोचनञ्च नृपाणामभिषेचनम्।
मायास्तवः शम्भलेषु नानायज्ञादिसाधनम्॥ २३॥
नारदात् विष्णुयशसो मोक्षश्चात्र प्रकीर्त्तितः।
कृतधर्म्मप्रवृत्तिश्च रुक्मिणीव्रतकीर्त्तनम्॥ २४॥
ततो विहारः कल्केश्च पुत्रपौत्रादिसम्भवः।
कथितो देवगन्धर्व्वगणागमनमत्र हि॥ २५॥
ततो वैकुण्ठगमनं विष्णोः कल्केरिहोदितम्।
शुकप्रस्थानमुचितं कथयित्वा कथाः शुभाः॥ २६॥
गङ्गास्तोत्रमिह प्रोक्तं पुराणे मुनिसम्मतम्।
जगतामानन्दकरं पुराणं पञ्चलक्षणम्॥ २७॥
सकल्कसिद्धिदं श्लोकैः षट्सहस्रं शताधिकम्।
सर्वशास्त्रार्थतत्वानां सारं श्रुतिमनोहरम्॥ २८॥
चतुर्वर्गप्रदं कल्किपुराणं परिकीर्त्तितम्।
प्रलयान्ते हरिमुखात् निःसृतं लोकविस्तृतम्॥ २९॥
अहो ! व्यासेन कथितं द्विजरूपेण भूतले।
विष्णोः कल्केर्भगवतः प्रभावं परमाद्भुतम्॥ ३०॥

ये भक्त्यात्र पुराणसारममलं श्रीविष्णुभावाप्लुतं
शृण्वन्तीह वदन्ति साधुसदसि चेत्रे सुतीर्थाश्रमे।
दत्वा गां तुरगं गजं गजवरं स्वर्णं द्विजायादरात्
वस्त्रालङ्करणैः प्रपूज्य विधिवत् मुक्तास्त एवोत्तमाः॥३१॥
श्रुत्वा विधानं विधिवत् ब्राह्मणो वेदपारगः।
क्षत्रियो भूपतिर्वैश्यो धनी शूद्रो महान् भवेत्॥ ३२॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम्।
विद्यार्थी लभते विद्यां पठनात् श्रवणादपि॥ ३३॥
इत्येतत् पुण्यमाख्यानं लोमहर्षणजो मुनिः।
श्रावयित्वा मुनीन् भक्त्या ययौ तीर्थाटनाद्दतः॥ ३४॥
शौनको मुनिभिः सार्द्धं सूतमामन्त्र्य धर्म्मवित्।
पुण्यारण्ये हरिं ध्यात्वा ब्रह्म प्राप स योगवित्॥ ३५॥
लोमहर्षणजं सर्व-पुराणज्ञं यतव्रतम्।
व्यासशिष्यं मुनिवरं तं सूतं प्रणमाम्यहम्॥ ३६॥
आलोक्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः।
इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा॥ ३७॥
वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥ ३८॥

सजलजलददेहो वातवेगैकवाहः
करधृतकरबालः सर्वलोकैकपालः।
कलिकुलबलहन्ता सत्यधर्म्मप्रणेता
कलयतु कुशलं वः कल्किरूपः स भूपः॥ ३९॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
एकविंशोऽध्यायः।
समाप्तम्।

१११ मत्स्यपुराणम् ६
११२ चरकसंहिता(वैद्यक) सम्पूर्ण ६
११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर ६
११४ भगवद्गीता शाङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ४
११५ शब्दशक्तिप्रकाशिका (न्याय) ॥।
११६ मालतीमाधव नाटक सटीक ॥०
११७ भट्टिकाव्य टीकाद्वयसहित २
११८ काव्यप्रकाश अलङ्कार सटीक ४
११९ शाण्डिल्यसूत्र सभाष्य ॥०
१२० लघुकौमुदीव्याकरणम् ॥०
१२१ महानाटकम्(हनुमन्नाटकम्) ।
१२२ दशरूपकम् (अलङ्कार) १
१२३ चम्पूरामायण सटीक १
१२४ (चम्पूरामायणम्) भोजचम्पू ॥
१२५ मार्कण्डेयपुराणम् २
१२६ गोलाध्याय: भास्कराचार्य्यकृत॥
१२७ गणिताध्याय:भास्कराचार्य्यकृत१
१२८ पञ्चदशी (सटीक) वेदान्त १॥
१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १
१३० शकुन्तलानाटक सटीक १
१३१ शब्दरूपादर्श: ॥०
१३२ वाराही संहिता (ज्योतिष) २
१३३ तर्कामृत (जगदीशकृत)न्याय ।०
१३४ द्वात्रिंशत्पुत्तलिका सिंहासन १
१३५ उत्तररामचरित नाटकसटीक १
१३६ शङ्करविजय १॥०
१३७ मृच्छकटिक नाटक सटीक १॥
१३८ काव्यादर्श सटीक (अलङ्का
१३९ अष्टाङ्गहृदय(वाग्भट)वैद्य
१४० शुक्रनीति सटीक
१४१ गीतगोविन्द काव्य सटीक
१४२ अग्निपुराणम्
१४३ विष्णुपुराणम् सटीक
१४४ मीमांसादर्शन शबरभाष्यसहि
१४५ अध्यात्मरामायणम् सटी
१४६ महानिर्वाणतन्त्रम् सटीक
१४७ मीमांसादर्शनस्य अधिकर
माला माधवाचार्य्यविरचिता
१४८ श्रुतबोधः (छन्दोग्रन्थ)सट
१४९ बालरामायणनाटक सटी
१५० लिङ्गपुराणम्
१५१ चण्डकौशिकनाटक सटीक
१५२ चैतन्यचन्द्रोदयनाटक सटी
१५३ कलापव्याकरणं वा कातन्
१५४ कुसुमाञ्जलि सटीक (न्याय)
१५५ संगीतपारिजात
१५६ साङ्ख्यसार
१५७ नागानन्द नाटक सटीक
१५८ नागानन्द नाटक मूल
१५९ ब्रह्मवैवर्त्त पुराण सम्पूर्ण
१६० वैशेषिकदर्शनम सभाष्य
१६१ कल्किपुराणम्
१६२ चाणक्यशतकम् सटीक
१६३ श्रीहर्षचरितबाणभट्टकृतग
१६४ कर्पूरमञ्जरी नाटिका सटी

कलिकाता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिणः
श्रीजीवानन्दविद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि।